॥ सर्वसारोपनिषत् ॥

समस्तवेदान्तसारसिद्धान्तार्थकलेवरम् ।
विकलेवरकैवल्यं रामचन्द्रपदं भजे ॥

सर्वसारं निरालम्बं रहस्यं वज्रसूचिकम् ।
तेजोनादध्यानविद्यायोगतत्त्वात्मबोधकम् ॥

ॐ सह नाववतु ॥ सह नौ भुनक्तु ॥ सह वीर्यं करवावहै ॥

तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

कथं बन्धः कथं मोक्षः का विद्या काऽविद्येति ।
जाग्रत्स्वप्नसुषुप्तितुरीयं च कथम् ।
अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयकोशाः कथम् ।
कर्ता जीवः पञ्चवर्गः क्षेत्रज्ञः साक्षी कूटस्थोऽन्तर्यामी कथम् ।
प्रत्यगात्मा परात्मा माया चेति कथम् ।
आत्मेश्वरजीवः अनात्मनां देहादीनामात्मत्वेनाभिमन्यते
सोऽभिमान आत्मनो बन्धः । तन्निवृत्तिर्मोक्षः ।
या तदभिमानं कारयति सा अविद्या । सोऽभिमानो यया
निवर्तते सा विद्या । मन आदिचतुर्दशकरणैः
पुष्कलैरादित्याद्यनुगृहीतैः शब्दादीन्विषयान्-
स्थूलान्यदोपलभते तदात्मनो जागरणम् ।
तद्वासनासहितैश्चतुर्दशकरणैः शब्दाद्यभावेऽपि
वासनामयाञ्छब्दादीन्यदोपलभते तदात्मनः स्वप्नम् ।
चतुर्दशकरणो परमाद्विशेषविज्ञानाभावाद्यदा
शब्दादीन्नोपलभते तदात्मनः सुषुप्तम् ।
अवस्थात्रयभावाभावसाक्षी स्वयंभावरहितं
नैरन्तर्यं चैतन्यं यदा तदा तुरीयं चैतन्यमित्युच्यते ।
अन्नकार्याणां कोशानां समूहोऽन्नमयः कोश उच्यते ।
प्राणादिचतुर्दशवायुभेदा अन्नमयकोशे यदा वर्तन्ते
तदा प्राणमयः कोश इत्युच्यते ।
एतत्कोशद्वयसंसक्तं मन आदि चतुर्दशकरणैरात्मा
शब्दादिविषयसङ्कल्पादीन्धर्मान्यदा करोति तदा मनोमयः
कोश इत्युच्यते । एतत्कोशत्रयसंसक्तं तद्गतविशेषज्ञो
यदा भासते तदा विज्ञानमयः कोश इत्युच्यते ।

एतत्कोशचतुष्टयं संसक्तं स्वकारणाज्ञाने वटकणिकायामिव वृक्षो यदा वर्तते तदानन्दमयः कोश इत्युच्यते । सुखदुःखबुद्ध्या श्रेयोऽन्तः कर्ता यदा तदा इष्टविषये बुद्धिः सुखबुद्धिरनिष्टविषये बुद्धिर्दुःखबुद्धिः । शब्दस्पर्शरूपरसगन्धाः सुखदुःखहेतवः । पुण्यपापकर्मानुसारी भूत्वा प्राप्तशरीरसंयोग-मप्राप्तशरीरसंयोगमिव कुर्वाणो यदा दृश्यते तदोपहितजीव इत्युच्यते । मन आदिश्च प्राणादिश्चेच्छादिश्च सत्त्वादिश्च पुण्यादिश्चैते पञ्चवर्गा इत्येतेषां पञ्चवर्गाणां धर्मीभूतात्मा ज्ञानादृते न विनश्यत्यात्मसन्निधौ नित्यत्वेन प्रतीयमान आत्मोपाधिर्यस्तल्लिङ्गशरीरं हृद्ग्रन्थिरित्युच्यते तत्र यत्प्रकाशते चैतन्यं स क्षेत्रज्ञ इत्युच्यते । ज्ञातृज्ञानज्ञेयानामाविर्भाव-तिरोभावज्ञाता स्वयमाविर्भावतिरोभावरहितः स्वयंज्योतिः साक्षीत्युच्यते ।
ब्रह्मादिपिपीलिकापर्यन्तं सर्वप्राणिबुद्धिष्ववशिष्टत-योपलभ्यमानः सर्वप्राणिबुद्धिस्थो यदा तदा कूटस्थ इत्युच्यते । कूटस्थोपहितभेदानां स्वरूपलाभहेतुर्भूत्वा मणिगणे सूत्रमिव सर्वक्षेत्रेष्वनुस्यूतत्वेन यदा काश्यते आत्मा तदान्तर्यामीत्युच्यते ।
सत्यं ज्ञानमनन्तं ब्रह्म । सत्यमविनाशि । अविनाशि नाम देशकालवस्तुनिमित्तेषु विनश्यत्सु यन्न विनश्यति तदविनाशि । ज्ञानं नामोत्पत्तिविनाशरहितं नैरन्तर्यं चैतन्यं ज्ञानमुच्यते । अनन्तं नाम मृद्विकारेषु मृदिव स्वर्णविकारेषु स्वर्णमिव तन्तुविकारेषु तन्तुरिवाव्यक्तादिसृष्टिप्रपञ्चेषु पूर्णं व्यापकं चैतन्यमनन्तमित्युच्यते ।
आनन्दं नाम सुखचैतन्यस्वरूपोऽपरिमितानन्द-समुद्रोऽवशिष्टसुखस्वरूपश्चानन्द इत्युच्यते ।
एतद्वस्तुचतुष्टयं यस्य लक्षणं देशकाल-वस्तुनिमित्तेश्वव्यभिचारी तत्पदार्थः परमात्मेत्युच्यते ।
त्वंपदार्थादौपाधिकात्तत्पदार्थादौपाधिक-भेदाद्विलक्षणमाकाशवत्सूक्ष्मं केवलसत्ता-मात्रस्वभावं परं ब्रह्मेत्युच्यते । माया नाम अनादिरन्तवती प्रमाणाप्रमाणसाधारणा न सती नासती न सदसती स्वयमधिका विकाररहिता निरूप्यमाणा सतीतरलक्षणशून्या सा मायेत्युच्यते । अज्ञानं

तुच्छाप्यसती कालत्रयेऽपि पामराणां वास्तवी च
सत्त्वबुद्धिर्लौकिकानामिदमित्थमित्यनिर्वचनीया वक्तुं न शक्यते ।
नाहं भवाम्यहं देवो नेन्द्रियाणि दशैव तु ।
न बुद्धिर्न मनः शश्वन्नाहङ्कारस्तथैव च ॥ १॥

अप्राणो ह्यमनाः शुभ्रो बुद्ध्यादीनां हि सर्वदा ।
साक्ष्यहं सर्वदा नित्यश्चिन्मात्रोऽहं न संशयः ॥ २॥

नाहं कर्ता नैव भोक्ता प्रकृतेः साक्षिरूपकः ।
मत्सान्निध्यात्प्रवर्तन्ते देहाद्या अजडा इव ॥ ३॥

स्थाणुर्नित्यः सदानन्दः शुद्धो ज्ञानमयोऽमलः ।
आत्माहं सर्वभूतानां विभुः साक्षी न संशयः ॥ ४॥

ब्रह्मैवाहं सर्ववेदान्तवेद्यं
नाहं वेद्यं व्योमवातादिरूपम् ।
रूपं नाहं नाम नाहं न कर्म
ब्रह्मैवाहं सच्चिदानन्दरूपम् ॥ ५॥

नाहं देहो जन्ममृत्यु कुतो मे
नाहं प्राणः क्षुत्पिपासे कुतो मे ।
नाहं चेतः शोकमोहौ कुतो मे
नाहं कर्ता बन्धमोक्षौ कुतो म इत्युपनिषत् ॥

ॐ सह नाववतु ॥ सह नौ भुनक्तु ॥ सह वीर्यं करवावहै ॥

तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥